ॐ

श्रीलक्ष्मीधरकवि विरचित

# अद्वैतमकरन्दः

श्री स्वयम्प्रकाशयतिप्रणीतया
'रसाभिव्यञ्जिका' व्याख्यया



ॐ

श्रीलक्ष्मीधरकवि विरचित

# अद्वैतमकरन्दः

श्लो।।कटाक्ष किरणाचान्तनमन्मोहाब्धये नमः।

अनन्तानन्दकृष्णाय जगन्मङ्गलमूर्तये।।1।।

श्लो।।अहमस्मि सदा भामि कदाचिन्नाहमप्रियः।

ब्रह्मैवाहमतः सिद्धं सच्चिदानन्दलक्षणम्।।2।।

श्लो।।मय्येवोदेति चिद्व्योम्नि जगद्गन्धर्वपत्तनम्।

अतोऽहं न कथं ब्रह्म सर्वज्ञं सर्वकारणम्।।3।।

श्लो।।न स्वतः प्रत्यभिज्ञानान्निरंशत्वान्न चान्यतः।

न चाश्रयविनाशान्मे विनाशः स्यादनाश्रयात्।।4।

श्लो।।न शोषप्लोषविक्लेदच्छेदाश्चिन्नभसो मम।

सत्यैरप्यनिलाग्न्यम्भः शस्त्रैः किमुत कल्पितैः।।5।।

श्लो।।अभारूपस्य विश्वस्य भानं भासंनिधेर्विना।

कदाचिन्नावकल्पेत भा चाहं तेन सर्वगः।।6।।

श्लो।।नहि भानादृते सत्त्वं नर्ते भानं चितोऽचितः।
चित्संभेदोऽपि नाध्यासादृते तेनाहमद्वयः।।7।।

श्लो।।न देहो नेन्द्रियं चाहं न प्राणो न मनो न धीः।
ममतापरिरब्धत्वादाक्रीडत्वादिदं धियः।।8।।

श्लो।।साक्षी सर्वान्वितः प्रेयानहं नाहं कदाचन।
परिणामपरिच्छेदपरितापैरुपप्लवात्।।9।।

श्लो।।सुप्तेहमि न दृश्यन्ते दुःखदोषप्रवृत्तयः।
अतस्तस्यैव संसारो न मे संसर्तुसाक्षिणः।।10।।

श्लो।।सुप्तः सुप्तिं न जानाति नाऽसुप्ते स्वप्नजागरौ।
जाग्रत्स्वप्नसुषुप्तीनां साक्ष्यतोऽहमतद्दृशः।।11।।

श्लो।।विज्ञानविरतिः सुप्तिस्तज्जन्म स्वप्नजागरौ।
तत्साक्षिणः कथं मे स्युर्नित्यज्ञानस्य ते त्रयः।।12।।

श्लो।।षड्विकारवतां वेत्ता निर्विकारोऽहमन्यथा।
तद्विकारानुसंधानं सर्वथा नावकल्पते।।13।।

श्लो।।तेन तेन हि रूपेण जायते लीयते मुहुः।

विकारि वस्तु तस्यैषामनुसंधातृता कुतः।।14।।

श्लो।।न च स्वजन्म नाशं वा द्रष्टुमर्हति कश्चन।

तौ हि प्रागुत्तराभावचरमप्रथमक्षणौ।।15।।

श्लो।।न प्रकाशेऽहमित्युक्तिर्यत्प्रकाशैकनिबन्धनः।

स्वप्रकाशं तमात्मानमप्रकाशः कथं स्पृशेत्।।16।।

श्लो।।तथाप्याभाति कोऽप्येष विचाराभावजीवनः।

अवश्यायश्चिदाकाशे विचारार्कोदयावधिः।।17।।

श्लो।।आत्माज्ञानमहानिद्राजृम्भितेऽस्मिञ्जगन्मये।

दीर्घस्वप्ने स्फरन्त्येते स्वर्गमोक्षादिविभ्रमाः।।18।।

श्लो।।जडाजडविभागोऽयमजडे मयि कल्पितः।

भित्तिभागे समे चित्रचराचरविभागवत्।।19।।

श्लो।।चेत्योपरागरूपा मे साक्षितापि न तात्त्विकी।

उपलक्षणमेवेयं निस्तरङ्गचिदम्बुधेः।।20।।

श्लो।।अमृताब्धेर्न मे जीर्णिर्मृषाडिण्डीरजन्मभिः।

स्फटिकाब्धेर्न मे रागः स्वाप्नसंध्याभ्रविभ्रमैः।।21।।

श्लो।।स्वरूपमेव मे सत्त्वं न तु धर्मो नभस्त्ववत्।
मदन्यस्य सतोऽभावान्नहि सा जातिरिष्यते।।22।।

श्लो।।स्वरूपमेव मे ज्ञानं न गुणः स गुणो यदि।
अनात्मत्वमसत्वं वा ज्ञेयाज्ञेयत्वयोः पतेत्।।23।।

श्लो।।अहमेव सुखं नान्यदन्यच्चेन्नैव तत्सुखम्।
अमदर्थं न हि प्रेयो मदर्थं न स्वतः प्रियम्।।24।।

श्लो।।न हि नानास्वरूपं स्यादेकं वस्तु कदाचन।
तस्मादखण्ड ऐवास्मि विजहज्जागतीं भिदाम्।।25।

श्लो।।परोक्षतापरिच्छेदशाबल्यापोहनिर्मलम्।
तदसीति गिरा लक्ष्यमहमेकरसं महः।।26।।

श्लो।।उपशान्तजगज्जीवशिष्याचार्येश्वरभ्रमम्।
स्वतः सिद्धमनाद्यन्तं परिपूर्णमहं महः।।27।।

श्लो।।लक्ष्मीधरकवेः सूक्तिशरदम्भोजसंभृतः।
अद्वैतमकरन्दोऽयं विद्वद्भृङ्गैर्निपीयताम्।।28।।

।।इति श्रीलक्ष्मीधरकवि विरचित अद्वैमकरन्दः।।

# विषयानुक्रमणिका

### श्रीलक्ष्मीधरकविविरचितः

# अद्वैतमकरन्दः

## स्वयंप्रकाशकृतटीकासहितः



*नित्यं निरन्तरानन्दं चिद्घनं ब्रह्म निर्भयम् ।*[१]
*श्रुत्या तर्कानुभूतिभ्यामहमस्म्यद्वयं सदा ॥१॥*

*अम्बागृहीतवामार्धं वन्दे चन्द्रकलाधरम् ।*
*लावण्यमधुराकारं कारुण्यरसवारिधिम् ॥२॥*

*कैवल्यानन्दयोगीन्द्रपादकञ्जरजोरविः ।*
*राजते मे हृदाकाशे मोहध्वान्तनिवर्तकः ॥३॥*

*शुद्धानन्दपदाम्भोजद्वन्द्वं सेवे यदुद्भवम् ।*
*निर्वाणरसमास्वाद्य[२] हृष्टाः शिष्यालिपङ्क्तयः ॥४॥*

*सच्चिदानन्दयोगीन्द्रा जयन्ति भुवि केचन ।*
*यत्कृपालवत[३]स्तीर्णो मया संसारवारिधिः ॥५॥*

इह खलु लक्ष्मीधरो नाम कश्चित् कवीन्द्रो[४] निरन्तरनित्याद्यनुष्ठानशुद्धस्वान्ततया सञ्जातविवेकवैराग्यशमादिमुमुक्षावत आत्मविविदिषया संत्यक्तलोकवेदधर्मान् गुरुवर चरणोपसर्पणपुरःसरं सम्य[५]क्श्रुतवेदान्ततत्त्वेऽप्यसंभावनया प्रतिबन्ध[६]ज्ञानतयाऽपरितुष्यतः कांश्चित् पुरुषधौरेयानुपलभ्य सञ्जातकरुणस्तेषां करतलबिल्वफलवत्[७] स्फुटं वेदान्त प्रतिपाद्यं ब्रह्म सच्चिदानन्दलक्षणं सर्वज्ञं सर्वोपादानं नित्यं सर्वगमद्वयं देहेन्द्रियप्राणमनो बुद्ध्यहङ्कारसाक्षि प्रत्यगभिन्नतया तर्कैः सम्भावयितुं किञ्चित् प्रकरणमद्वैतमकरन्दा ख्यमारभमाणश्चिकीर्षितस्याविघ्नेन[८] परिसमाप्तये स्वेष्टदेवताप्रणामरूपं मङ्गलं स्वयमनुष्ठाय शिष्यशिक्षायै ग्रन्थतो निबध्नाति—

---

१. पं. ८, ८५ (जून २, १८७३) ९-२१.

२. –मासाद्य इति पा. ३. –बलत-इति पा. ४. पण्डितेन्द्र इत्यर्थः, ५. विधितः इति पा.

६. –नादिप्रतिबद्धज्ञा—इति पा. ७. –बिल्ववत् इति पा. ८. –तस्य तस्या-इति पा.

*कटाक्षकिरणाचान्तनमन्मोहाब्धये नमः ।*

*अनन्तानन्दकृष्णाय जगन्मङ्गलमूर्तये ॥१ ॥*

**कटाक्षो** भक्तेषु तिर्यक्पातिता[१] कृपादृष्टिः, तस्याः किरणेन प्रभया, आचान्तः शोषितो नमतां नमस्कर्तॄणां मोहोऽज्ञानं स एवाब्धिः समुद्रो येन सः, तथा तस्मै, श्रीगुरुपरमेश्वरप्रसादरहितानां दुस्तरत्वाद् भ्रान्तिपरम्परातरङ्गयुक्तत्वाद्रागादिमहाग्राहादियोगाच्च युक्तमज्ञानस्य समुद्रत्वम् । अनन्तानन्दकृष्णाय अनन्तो देशकालवस्तुपरिच्छेदशून्य आनन्दः स्वरूपं यस्य सः, अनन्तानन्दः, स चासौ कृष्णश्च, अनन्तानन्दकृष्णः, वसुदेवकुमारः, तस्मै, जगन्मङ्गलमूर्तये जगतां लोकानां मङ्गलभूता सुखाभिवृद्धिकरी मूर्तिर्विग्रहो यस्य स जगन्मङ्गलमूर्तिस्तस्मै,[२] नमोऽस्तु[३] । जगन्मङ्गलमूर्तय इत्यनेन स्मृतिमात्रेण तस्यैहिकामुष्मिकपुरुषार्थपरिपन्थिविघ्ननिरासससामर्थ्यमुक्तम्, मङ्गलस्य तादृशत्वात् ॥१ ॥

एवमनुष्ठितस्वेष्टदेवतानमस्कारलक्षणमङ्गलनिबर्हितसकलान्तरायः प्रथमं[४] तत्त्वमस्यादिवाक्यैस्तात्पर्ययुक्तैर्बोधितं प्रत्यगात्मनो ब्रह्मत्वं युक्त्या सम्भावयन्नाह—

*अहमस्मि सदा भामि कदाचिन्नाहमप्रियः ।*

*ब्रह्मैवाऽहमतः सिद्धं सच्चिदानन्दलक्षणम् ॥२ ॥*

**अहमस्मीति** । अहमहङ्कारादिसाक्ष्यस्मि, सद्रूपो भवामि, आत्मन्यध्यस्ताहङ्कारादेः सत्ताप्रदत्वात्, सदावस्थात्रयेऽपि भामि, जाग्रति देहेन्द्रियादिसाक्षितया, स्वप्नेऽन्तःकरण--वासनाप्रपञ्चसाक्षितया, सुषुप्तावज्ञानसाक्षितया च प्रकाशे, कदाचित्, कदाचिदपि, दुःखाद्यनुभवकालेऽपि, अहं नाप्रियो भवामि, नानिष्टो भवामि; किन्तु सदा प्रिय एव भवामि, दुःखादौ द्वेषस्यात्मस्नेहनिमित्तत्वाच्छत्रुदुःखादौ द्वेषस्यादर्शनात्, तथा च परमप्रीतिविषयत्वादानन्दरूपः; यस्मात् कालत्रयेऽप्यबाध्यमानत्वात् सद्रूपः, प्रकाश[५]मानत्वाच्चिद्रूपः,

---

१. –द्विपातिता इति पा. २. स तथा तस्मै इति पा.

३.– स्तु । यद्वा कटाक्षः प्रतिभाक्षममन्तःकरणं तस्य किरणो वाक्यजन्यतद्वृत्तिप्रतिफलितं चैतन्यम्, तेनाचान्तो भक्षितो नमतां स्वात्मप्रवणानामन्तर्मुखाणां श्रवणादिपराणां मोहोऽज्ञानमेवाब्धिरसंख्याध्यासपरंपराकल्लोलोदयहेतुत्वादनेकानर्थदुष्टाह्यादियोगाच्च येन तस्मै, यद्वा कटाक्षोऽन्तिमप्रमाणं वाक्यजन्यवृत्तिरेव तदनन्तरं सर्वबाधेन प्रमाणादिव्यवहारप्रवृत्तेः, यत्र त्वस्येत्यादिश्रुतेः, अन्यत् पूर्ववत् । यद्वा कटाक्षवत् प्रसृतमपरोक्षं स्वरूपचैतन्यमेव "दिवीव चक्षुण्यतं", "यत् साक्षादपरोक्षाद् ब्रह्म" इत्यादिश्रुतेः, तस्य किरणेन शेषं पूर्ववत् । "अत्र पक्षे" कृषिर्भूवाचकः शब्दो नयतिर्वृत्तिवाचक इति कृष्णशब्दार्थो द्रष्टव्यः, जगतां मङ्गलकरी मूर्तिर्यस्य, "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति", "एष ह्येवानन्दयति" इत्यादिश्रुतेः । इति पा.

४. मङ्गलं सकलान्तरायशमनं विधाय प्रथमं इति पा.

५. अवस्थात्रये भास- इति पा.

परमप्रीतिविषयत्वादानन्दरूपश्च, तस्मादहं सच्चिदानन्दलक्षणं सच्चिदानन्दरूपं ब्रह्मेति सिद्धम्[१]। अत्रेदमनुमानं विवक्षितम्। प्रत्यगात्मा ब्रह्मणो न भिद्यते, सच्चिदानन्दरूपत्वात्, ब्रह्मवदिति, न च हेतुरसिद्धः, अहमस्मीत्यादिना तस्य साधितत्वात्।

नन्वनुमानस्य नाऽहमीश्वर इति प्रत्यक्षविरोध इति चेत्, न, तावदात्मनो ब्रह्मत्वे बाह्य-प्रत्यक्षविरोधः, आत्मनि रूपाद्यभावेन बाह्यस्य तत्राऽप्रवृत्तेः, नाऽपि मानसप्रत्यक्षविरोधः, मनसो मनःसाक्षिण्यात्मनि प्रवृत्तेरसम्भवात्।

ननु जीवेश्वरौ भिन्नौ, किञ्चिज्ज्ञत्वसर्वज्ञत्वादिविरुद्धधर्माधारत्वाद्, दहनतुहिनवत्, इत्याद्यनुमानविरोध इति चेत्, न, विरुद्धधर्मवतोर्बिम्बप्रतिबिम्बयोरुच्चमन्दशब्दाधार आकाशे च व्यभिचारात्।

ननु "द्वा सुपर्णा" इत्यादिश्रुतिविरोध इति चेत्, न, तस्या अतत्परत्वेन तत्त्वमस्यादि श्रुत्या बाध्यमानत्वात्[२]।

तस्मान्नाहमीश्वर इति बुद्धिर्देहाद्युपाधिनिमित्ता भ्रान्तिः। न तु [३]जीवस्वरूपविषया। तदुक्तम्—

*"त्वयि मयि च गण्यमाने मशकान्मशकोऽहमेव देहदृशा।*

*विश्वाधिकेश ते मे सद्बोधानन्दपूर्णता तुल्या" ॥इति।*

अतोऽहं ब्रह्मैवेति भावः ॥२॥

ननु "यः सर्वज्ञः सर्ववि"दित्यादिश्रुत्या हि ब्रह्म सर्वज्ञतयावगम्यते, यतो वेत्यादि श्रुत्या च सर्वजगत्कारणतया च, प्रत्यगात्मा तु स्वशरीरादिकमपि साकल्येन न जानाति, स्वातन्त्र्येण किंचित् कर्तुमपि न शक्नोति, तत् कथमस्य सर्वज्ञेन सर्वकारणेन च ब्रह्मणाभेद इत्याशङ्क्य प्रत्यगात्मनोऽपि तद्द्वयमुपपादयति—

***मय्येवोदेति चिद्व्योम्नि जगद्गन्धर्वपत्तनम्।***

***अतोऽहं न कथं ब्रह्म सर्वज्ञं सर्वकारणम् ॥३॥***

**मय्येवेति**। चिद्व्योम्नि चिदाकाशे मयि प्रत्यगात्मन्येव, जगद्गन्धर्वपत्तनं जगदेव गन्धर्वपत्तनम्, ऐन्द्रजालिकविक्षुब्धमायया मरणावस्थायां च मेघेषु प्रतीयमानं नगरं गन्धर्व पत्तनं नाम, तादृशमिदं जगदुदेति, उत्पद्यत इत्यर्थः। अयं भावः — मिथ्यापदार्थस्य हि द्रष्टैवोपादानम्, यथा स्वप्नप्रपञ्चस्य तत्साक्षी, तथा जाग्रत्प्रपञ्चस्यापि सर्वस्य दृश्यत्वेन मिथ्यात्वात् तद्द्रष्टा प्रत्यगात्मैवोपादानं वक्तव्यम्। तदुक्तम्—

---

१. ब्रह्मैव भवामि इति पा. २. बाधात् इति पा. ३. शुद्धजीव-इति पा.

*"यथा स्वप्नप्रपञ्चोऽयं मयि मायाविजृम्भितः ।*

*एवं जाग्रत्प्रपञ्चश्च मयि मायाविजृम्भितः" ॥इति ।*

एवं च प्रत्यगात्मनस्तद्द्रष्टृत्वलक्षणं सर्वज्ञत्वं तदधिष्ठानत्वलक्षणं सर्वकारणत्वं च सिध्यति ।

ननु बहुदूरव्यवहितमेर्वादीनामदृश्यमानानां कथं प्रत्यगात्मा द्रष्टा, कथं वा तदुपादानमिति चेत्, शृणु तर्हि रहस्यम्, एतावन्तं कालं मेर्वादिकमहं नाज्ञासिषमिति ह्यज्ञानविशेषणतया मेर्वादिकं स्मर्यते, तच्च स्मरणं मेर्वाद्यनुभवं विनानुपपद्यमानं सन्मेर्वाद्यनुभवं कल्पयति, तत्र चेन्द्रियादीनामप्रवृत्तेः प्रत्यगात्मचैतन्येऽध्यस्ततयैव मेर्वाद्यनुभवो वक्तव्यः । अध्यस्तस्य चाधिष्ठानमेवोपादानं तद्भानादेव भानं च भवति, तथा च प्रत्यगात्मा स्वाध्यस्तमेर्वादेरप्यज्ञाततया साक्षी, तदुपादानं च भवति, तदुक्तं ब्रह्मगीतायाम्—

*"ज्ञातरूपेण चाज्ञातस्वरूपेण च साक्षिणः ।*

*सर्वं भाति तदाभाति ततस्तद् व्यापि सर्वदा" ॥इति ।*

तथा च प्रत्यगात्मा सर्वज्ञः सर्वकारणं चेति । यत उक्तप्रकारेण सर्वकारणं चाहमतः कथं तद्रूपं ब्रह्म न भवामि, भवाम्येवेत्यर्थः ॥३ ॥

ननु 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्' इत्याद्युपनिषत्सु नित्यं ब्रह्म श्रूयते, आत्मा च मरणादिधर्मकत्वादनित्य एवानुभूयते, ततश्च न तयोरैक्यमित्याशङ्क्य किमात्मनो बौद्धपक्ष इव स्वत एव नाशं ब्रवीषि, उत दण्डसंयोगाद्घटस्येवान्यसम्बन्धादात्मनो नाशं ब्रवीषि, अथवा पटनाशात् पटगतरूपादिवदाश्रयनाशान्नाशं ब्रवीषि, इति विकल्प्याद्यं प्रत्याह—

***न स्वतः प्रत्यभिज्ञानान्निरंशत्वान्न चान्यतः ।***

***न चाश्रयविनाशान्मे विनाशः स्यादनाश्रयात् ॥४ ॥***

**न स्वत इति** । मे प्रत्यगात्मनो मम न स्वतो नाशो भवति, तत्र हेतुः, प्रत्यभिज्ञानादात्मनः प्रत्यभिज्ञायमानत्वात् । प्रत्यभिज्ञानं नाम पूर्वमनुभूतस्य कालान्तरे प्रमाणेन तत्तोल्लेखपूर्वकं ज्ञानम् । आत्मा हि योऽहं बाल्ये पितरावन्वभूवं स एवेदानीं स्थविरे प्रणप्तॄननुभवामि, योऽहं सुप्तः स्वप्नमद्राक्षं स एवेदानीं जागर्मीति च बाल्याद्यवस्थासु जाग्रदाद्यवस्थासु च प्रत्यभिज्ञायते । तच्च प्रत्यभिज्ञानमात्मनो निर्निमित्तनाशे नोपपद्यते । तथा हि, आत्मनो हि स्वतो नाशे प्रतिक्षणमन्योऽन्य आत्मेति वक्तव्यम् । तत्र कथं वान्योऽन्येन सोऽहमिति प्रत्यभिज्ञायेत, आत्मा च सोऽहमित्यात्मानं प्रत्यभिजानाति । तस्मान्न तस्य स्वतो नाश इत्यर्थः ।

न द्वितीय इत्याह । निरंशत्वान्न चान्यत इति । निरंशत्वादंशरहितत्वान्निरवयवत्वाद् अन्यतो हेतुसंयोगादप्यात्मनो न नाश इत्यर्थः । आत्मा हि चिद्रूपत्वान्निरवयवः । यदि निरवयवस्यात्मनः[१] सावयवत्वमुच्येत, तर्हि वक्तव्यम्, आत्मावयवाश्चेतना अचेतना वा ।

नाद्यः, आत्मावयवानां हि प्रत्येकं चेतनत्वे विरुद्धाभिप्रायतया शरीरमुन्मथ्येत ।

न द्वितीयः, अचेतनैरवयवैरारब्धस्याप्यात्मनोऽप्यचेतनत्त्वप्रसङ्गात्, न ह्यचेतनैस्तन्तुभिरारब्धः पटश्चेतनो दृश्यते, ततो निरवयव एवात्मा, न निरवयवे चात्मनि हेतुसंयोगः सम्भवति, सत्यैकदेशवृत्तित्वात्, अतोऽन्यतोऽप्यात्मनो न नाश इति भावः ।

नापि तृतीय इत्याह । न चाश्रयेत्यादिना । आश्रयविनाशादाधारविनाशादपि मे मम विनाशो न स्यात्, कुतः ? अनाश्रयात्, आश्रयस्याधारस्याभावात् । आत्मा हि गुणक्रियाजात्याद्यन्यतमत्वाभावादनाश्रयः, निरवयवत्वाच्च नापि घटवदाश्रयः । अत आश्रयनाशादप्यात्मनो न नाशः । आत्मनो मरणादिप्रतीतिस्तु देहाद्युपाधिकृता । तदुक्तं सूत्रकृता— "चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वा"दिति । अस्य चार्थो विद्यारण्यगुरुभिरधिकरणरत्नमालायां दर्शितः ।

*"जीवस्य जन्ममरणे वपुषो वात्मनो हि ते ।*

*जातो मे पुत्र इत्युक्तेर्जातकर्मादिभिस्तथा[२] " ॥*

इति पूर्वपक्षे प्राप्ते सिद्धान्तमाह—

*"मुख्ये ते वपुषो भाक्ते जीवस्यैते अपेक्ष्य हि ।*

*जातकर्म च लोकोक्तिर्जीवापेतेति शास्त्रतः" ॥इति ।*

ततस्त्रिविधनाशाभावान्नित्य एवात्मेति तस्य ब्रह्मणोऽभेदः[३] सम्यग् घटत इति भावः ॥४ ॥

हेतुसंयोगादात्मनो न नाश इति द्वितीयं पक्षं प्रपञ्चयति—

***न शोषप्लोषविक्लेदच्छेदाश्चित्रभसो मम ।***

***सत्यैरप्यनिलाग्न्यम्भः शस्त्रैः किमुत कल्पितैः ॥५ ॥***

**न शोषेति** । चित्रभसश्चिदाकाशस्य ममात्मनोऽनिलेन वायुना न शोषः शोषणं पत्रफलादेरिव भवति, नाप्यग्निना प्लोषो दाहः पटादेरिव भवति, नाप्यम्भसा जलेन शस्यादेरिव विक्लेदः क्लेदनं भवति, नापि शस्त्रेणायुधेनेक्षुदण्डादेरिव च्छेदो द्वैधीभाव आत्मनो भवति,

---

१. चिद्रूपस्यात्मनः इति पा. २. -दितस्तथा इति पा. ३. -णाभेदः इति पा.

आकाशस्येवात्मनो निरवयवत्वेन वाय्वादिभिः सम्बन्धाभावादित्यर्थः। व्यावहारिकसत्यस्य भूताकाशस्यैव हि निरवयवत्वेनासङ्गत्वादाकाशतुल्यसत्यैरप्यनिलादिभिः शोषादयो न भवन्ति, आत्मनि मायाकल्पिततत्वेन मिथ्याभूतैर्वाय्वादिभिर्वस्तुतोऽद्वितीयस्यासङ्गस्यात्मनः[१] शोषादयो न सम्भवन्तीति किमु वक्तव्यमित्यर्थः। तदुक्तं भगवता— "अच्छेद्योऽय"-मित्यादिना[२] ॥५ ॥

ननु प्रत्यगात्मा परिच्छिन्न एवानुभूयते, अहमिहास्मीति प्रतीतेः। ब्रह्म च सर्वगतम्, "नित्यं विभुम्[३]" इत्यादिश्रुतेः। अतो नायं ब्रह्मेत्याशङ्क्यात्मनः सर्वगतत्वं युक्त्या सम्भावयन्नाह—

*आभारूपस्य विश्वस्य भानं भासंनिधेर्विना।*
*कदाचिन्नावकल्पेत भा चाहं तेन सर्वगः ॥६ ॥*

**आभारूपस्येति**। आभारूपस्याचिद्रूपस्य, जडस्येत्यर्थः, विश्वस्य जगतो भानं प्रकाशो भासंनिधेर्विना भासंनिधिं विना, चैतन्यसम्बन्धं विनेत्यर्थः, कदाचित् कदाचिदपि नावकल्पेत, न सम्भवेत्, भाचैतन्यरूपश्चाहं प्रत्यगात्मा, तेन जडसर्वप्रपञ्चभासकत्वेन प्रत्यगात्मा सर्वगः, सर्वगतो भवामीत्यर्थः, बहुयोजनदूरवर्तिचन्द्रसूर्यमण्डलम्, ततोऽप्यतिदूरवर्ति ध्रुवादि नक्षत्राणि च प्रत्यगात्मनो भासन्ते, तच्च भानं जडानां तेषां स्वतो न सम्भवति; किन्तु स्वप्रकाशरूपात्मचैतन्यसम्बन्धबलेनैव तद् वक्तव्यम्, स्वतोऽप्रकाशस्य घटादेः स्वप्रकाशदीपादिसम्बन्धबलेनैव प्रकाशदर्शनात्।

अथ[४] प्रत्यागात्मात्रैव तिष्ठेत् कथं ध्रुवादिना सम्बध्येत, ततो ध्रुवादिभासकत्वात् प्रत्यगात्मा सर्वगतः, परिच्छिन्नताप्रतीतिश्चात्मनोऽभिव्यञ्जकोपाधिपरिच्छेदाद्भ्रान्त्योपपद्यते। तदुक्तं ब्रह्मगीतायाम्—

*"स्वयं भातुमशक्तं हि जडात्मकमिदं जगत्।*
*चित्सम्बन्धबलेनैव खलु भाति न चान्यथा ॥*
*स्वाभिव्यञ्जकसङ्कोचात् सङ्कोचप्रतिभात्मनः।*
*न स्वरूपेण चिद्रूपः सर्वव्यापी सदा खलु" ॥इति।*

ततो जीवात्मा ब्रह्मैवेति भावः ॥६ ॥

---

१. –सत्यस्यापि नभसो निरवयवत्वेन परमतेऽसङ्गत्वात्, आकाशतुल्यैः सत्यैरप्यनिलादिभिः शोषादयो न भवन्ति, परमार्थसत्यत्वात् पुनः स्वस्मिन् कल्पितैर्वाय्वादिभिः, इति पा.

२. –क्तं गीतायाम्, अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च। नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः॥ इति। इति पा.

३. "विभुं सर्वगतं नित्यम्", इति पा. ४. यदि इति पा.

ननु जीवस्य ब्रह्माभेदोऽसङ्गतः, ब्रह्मण[४] एवासिद्धेः। देशकालवस्तुपरिच्छेदशून्यं वस्तु हि ब्रह्मेत्युच्यते। न च तत् सम्भवति, कालाकाशादेर्द्वितीयस्य विद्यमानत्वेन वस्तु परिच्छेदाभावस्यासिद्धेः, न चाकाशादेर्ब्रह्मण्यारोपितत्वेन मिथ्यात्वात् तेन तस्य न द्विती यत्वमिति वाच्यम्, आकाशादेरध्यस्तत्वे मानाभावात्। न च "आत्मन आकाशः सम्भूतः" इति श्रुतिस्तत्र मानमिति वाच्यम्, तत्राकाशादेर्ब्रह्मकार्यतामात्रप्रतीतेः, इत्याशङ्क्य ब्रह्मणोऽद्वितीयत्वसिद्धय आकाशादेरध्यस्तत्वं साधयति—

*न हि भानादृते सत्त्वं नर्ते भानं चितोऽचितः।*

*चित्सम्भेदोऽपि नाध्यासादृते तेनाहमद्वयः ॥७॥*

**न हीति।** भानादृते प्रकाशं विना पदार्थस्य सत्त्वं सद्भावो नास्ति, अप्रकाशमान शशविषाणादेः सत्त्वादर्शनादित्यर्थः। ततः किं तत्राह, नर्त इत्यादिना, अचितो जडस्य चित ऋते चैतन्यस्य सम्बन्धं विना भानं प्रकाशो नास्ति, स्वतो भानवत्त्वे जडत्वाभावप्रसङ्गा दित्यर्थः। ततोऽपि किं तत्राह, चित्संभेद इत्यादिना, चित्संभेदोऽपि चैतन्यसम्बन्धोऽप्य ध्यासादृते चित्यारोपितत्वं विना जडस्य न सम्भवतीत्यर्थः। अयं भावः— चिज्जडयोराध्यासिकसम्बन्धातिरिक्तं सम्बन्धं वदन् वादी प्रष्टव्यः, किं तयोः सम्बन्धः? संयोगः, उत समवायः, अथ तादात्म्यम्, अथवा विषयविषयिभाव इति।

नाद्यः, चितोऽद्रव्यत्वेन संयोगानुपपत्तेः, गुणाश्रयस्यैव द्रव्यत्वात्, चितो निर्गुणत्वात्।

नापि समवायः, चिज्जडयोर्गुणगुण्यादिष्वन्यतमत्वाभावात्।

ननु चिज्जडयोः कार्यकारणभावात् तन्तुपटयोरिव समवायोऽस्त्विति चेत्, न, तन्तु पटयोः समवायेऽवयवावयविताया एव प्रयोजकत्वेन कार्यकारणभावस्याप्रयोजकत्वात्, अन्यथा तुरीपटयोरपि समवायप्रसङ्गात्, अवयवावयवितायाश्च दृग्दृश्ययोरभावात्।

नापि तादात्म्यम्, परस्परविलक्षणयोस्तयोस्तादात्म्यासम्भवात्।

नापि विषयविषयिभावः, तस्य मूलसम्बन्धपूर्वकत्वात्, तदसम्भवस्य चोक्तत्वात्, अन्यथातिप्रसङ्गात्, तदुक्तं सर्वज्ञात्ममुनिभिः—

*"न संकरो नापि च संयुतिस्तयो*

*र्न चास्ति तद्वत् समवायसम्भवः।*

*अतो न चिच्चैत्यसमन्वयं प्रति*

*प्रतीयते काचन मूलसङ्गतिः"॥ इति।*

---

४. वस्तुतो ब्रह्मण इति पा.

ततस्तयोराध्यासिक एव सम्बन्ध इति वाच्यम्, तथा च जडपदार्थभानान्यथानुपपत्तिरेवाकाशादिरध्यस्तत्वे प्रमाणम्, तदपि तैरेवोक्तम्,

*"ततो वियन्मुख्यमदो जगज्जडं*

*चिदात्मनोऽस्यैव विवर्त इष्यताम् ।*

*अनाद्यविद्यापटसंवृतात्मन-*

*स्तदोपलभ्यत्वममुष्य कल्प्यते" ॥ इति ।*

तेनाकाशादेरध्यस्तत्वेनाहं प्रत्यगभिन्नः परमात्माद्वयः, अद्वितीय इत्यर्थः । ततश्च ब्रह्मणो वस्तुपरिच्छेदाभावेन त्रिविधपरिच्छेदशून्यत्वं सिद्धमित्यर्थः । तदुक्तं विद्यारण्यगुरुभिः पञ्चकोशविवेके—

"देशकालान्यवस्तूनां कल्पितत्वाच्च मायया ।

न देशादिकृतोऽन्तोऽस्ति ब्रह्मानन्त्यं स्फुटं ततः" ॥ इति ॥७ ॥

ननु स्थूलोऽहं कृशोऽहं काणोऽहं बधिरोऽहं मूकोऽहं बुभुक्षितोऽहं पिपासितोऽहं मन्ताहं निश्चितोऽहम्, इति देहादिरूपेणानुभूयमानस्य प्रतीचः कथं चिदेकरसब्रह्मता, इत्याशङ्क्य देहादीनामनात्मत्वं प्रत्येकं साधयति—

***न देहो नेन्द्रियं चाहं न प्राणो न मनो न धीः ।***

***ममतापरिरब्धत्वादाक्रीडत्वादिदं धियः ॥८ ॥***

**न देह इति ।** देहः सशिरस्कः पिण्डः, इन्द्रियं द्विविधम्, ज्ञानसाधनं चक्षुरादि, कर्मसाधनं पाण्यादि च, प्राणः पञ्चवृत्तिः, मनः संशयात्मकम्, धीर्बुद्धिर्निश्चयात्मिका, अहंशब्दस्य देहादिभिः प्रत्येकं सम्बन्धः, एते देहादयो बुद्धिपर्यन्ताः पञ्चापि पदार्था अनात्मान इत्यर्थः । कुत इत्यत आह, ममतेत्यादिना । ममतापरिरब्धत्वादिदं धियः, आक्रीडत्वाच्च, ममतया ममेतिबुद्ध्या परिरब्धत्वादालिङ्गितत्वाद् विषयीकृतत्वादिति यावत् । इदं धिय इदं बुद्धेः, आक्रीडत्वाल्लीलास्थानत्वादिदंबुद्धिविषयत्वादित्यर्थः । अत्रेदमनुमानं विवक्षितम् । देहादयः प्रत्येकमनात्मानः, ममताबुद्धिविषयत्वादिदंबुद्धिविषयत्वाच्च, घटादिवदिति । देहोऽनात्मा, रूपादिमत्त्वात्, घटवत्, इन्द्रियाण्यनात्मानः, करणत्वात्, कुठारवत्, प्राणोऽनात्मा, वायुत्वात्, बाह्यवायुवत्, देहोऽहमित्यादिप्रतीत्यभावाच्चानात्मत्वं पञ्चानाम् । कृशोऽहमित्यादिप्रतीतिस्तु रक्तः स्फटिक इत्यादिप्रतीतिवदात्मनि देहादिधर्माध्यासादप्युपपद्यते, नापि तत्संघातस्याप्यात्मत्वम्, अनात्मसमुदायस्तत्संघातोऽपि नात्मा, अनात्मत्वात्, गृहादिवदिति भावः ॥८ ॥

नन्वहङ्कारस्यात्मत्वमस्तु, तस्य ममेदंबुद्धिविषयत्वाभावात्, इत्याशङ्क्य सुषुप्त्यादावात्मनि विद्यमानेऽप्यहङ्कारस्याभावान्न तयोरैक्यमित्यभिप्रेत्य प्रकारान्तरेण तयोर्भेदं साधयति—

*साक्षी सर्वान्वितः प्रेयानहं नाहं कदाचन।*

*परिणामपरिच्छेदपरितापैरुपप्लवात् ॥९ ॥*

**साक्षीति।** साक्षी चिद्रूपोऽन्तःकरणपरिणामरागद्वेषादिद्रष्टा, सर्वान्वितः सर्वत्र घटपटादिष्वन्वितः, घटः स्फुरति, पटः स्फुरति, इति स्फुरणस्य सर्वत्रानुगतत्वेनानुभवात्, प्रेयान् प्रियतम आनन्दरूपः, तस्यैव प्रेयस्त्वात्, अनुभूयते ह्यात्मनः प्रियतमत्वम्, अहं सर्वदा भूयासं न कदाचिन्नाभूवमित्यात्मनि सर्वेषां प्रार्थनादर्शनादित्यर्थः। एवंभूतोऽहं प्रत्यगात्मा कदाचन कदाचिदपि नाहं, नाहङ्कारो भवामीत्यर्थः। तत्र हेतुमाह, परिणामेत्यादिना, अहङ्कारस्य परिणामपरिच्छेदपरितापैः। परिणामो रागद्वेषादिपरिणामः, परिच्छेदः परिमितत्वम्, परितापो दुःखादिः, एतैस्त्रिभिरुपप्लवः सम्बन्धः, तस्मादित्यर्थः। द्रष्टृदृश्यभावेन सर्वगतत्वपरिच्छिन्नत्वाद्याकारेणानन्दरूपित्वदुःखित्वाकारेण चानुभूयमानत्वादहङ्कारात्मनोर्भेदः स्फुट इत्यर्थः। किमिति तर्हि तयोर्भेदः सर्वैर्नानुभूयत इति चेत्, अहङ्कारात्मनोस्तप्तायःपिण्डवदविवेकेन दृढमेकतयाऽध्यसनान्नानुभूयत इति गृहाणेत्यभिप्रायः ॥९ ॥

नन्वेवमपि संसारिण आत्मनः कथं नित्यमुक्तब्रह्मता। न च संसारोऽहङ्कारस्यैव नात्मन इति वाच्यम्, आत्माहङ्कारोभयसन्निधाने प्रतीयमानस्य संसारस्याहङ्कारैकसम्बन्धित्वे मानाभावात्, इत्याशङ्क्यान्वयव्यतिरेकावेव तत्र मानमित्याह—

*सुप्तेऽहमि न दृश्यन्ते दुःखदोषप्रवृत्तयः।*

*अतस्तस्यैव संसारो न मे संसर्तृसाक्षिणः ॥१० ॥*

**सुप्तेऽहमीति।** अहम्यहङ्कारे सुप्त उपरते सति सुषुप्तिमूर्च्छादौ [१]दुःखदोषप्रवृत्तयः, दुःखं च, दोषा रागादयश्च, तत्कार्यभूता प्रवृत्तिश्च, दुःखदोषप्रवृत्तयः, ता न दृश्यन्ते यतोऽतस्तस्यैवाहङ्कारस्य संसारः, संसर्तृसाक्षिणः संसर्तुरहङ्कारस्य साक्षिणो मे मम प्रत्यगात्मनो न संसार इत्यर्थः। अहङ्कारे सति जाग्रत्स्वप्नयोः संसारदर्शनात्। तदभावे च सुषुप्त्यादौ केवल आत्मनि संसारादर्शनात्। अहङ्कारसम्बन्ध्येव संसार आत्मन्यपि तदविवेकात् प्रतीयते, यथा दाहकत्वमग्निसम्बन्ध्येव सत् तदविवेकादयस्यापि प्रतीयते। यथा वा रक्तिमा जपाकुसुमसम्बन्ध्येव सन्नविवेकात् स्फटिकेऽपि प्रतीयते, तद्वदात्मन्यप्यहङ्कारोपाधिवशादेव संसारः प्रतीयते, न स्वतः, सुषुप्त्यादावदर्शनात्। तदुक्तं सर्वज्ञात्ममुनिभिः—

---

१. –र्च्छयोर्दुः — इति पा.

*"कर्त्रादिसंनिधिबलेन तवापि कर्तृ-*

*भोक्तृप्रमातृवपुरापतति भ्रमेण ।*

*तद्बुद्धिसंश्रयमनात्मगतं प्रतीचि*

*शुद्धेऽपि पश्यति तमःपटलावृताक्षः" ॥इति ।*

अत आत्मा नित्यमुक्तं ब्रह्मैवेत्यभिप्रायः ॥१० ॥

नन्वेवमप्यात्मनो जाग्रदाद्यवस्थावत्त्वं वक्तव्यम्, अहङ्कारस्य सुषुप्तावभावेन सुषुप्त्यवस्थावत्त्वानुपपत्तौ जाग्रत्स्वप्नावस्थाद्वयसम्बन्धित्वस्याप्यनुपपत्तेस्तासां तिसृणामप्येकाश्रयत्वनियमादित्याशङ्क्याहङ्कारस्य सुषुप्तौ संस्काररूपेण वर्तमानत्वात् तस्यैव सुषुप्तिर्नात्मनः, तस्य सुषुप्तिसाक्षित्वात् । ततो जाग्रत्स्वप्नावप्यहङ्कारस्यैवेत्यभिप्रेत्याह—

***सुप्तः सुप्तिं न जानाति नाऽसुप्ते स्वप्नजागरौ ।***

***जाग्रत्स्वप्नसुषुप्तीनां साक्ष्यतोऽहमतद्दशः ॥११ ॥***

**सुप्त इति ।** यः सुप्तः सुप्तिं न जानाति, न वेत्ति, सोऽहङ्कार एव सुप्तः सुषुप्त्यवस्थावान् नैवात्मा, कुतः ? सुषुप्तितात्कालिकाज्ञानसाक्षितया जागरूकत्वादित्यर्थः । ततश्चासुप्ते सुषुप्त्यवस्थारहिते प्रत्यगात्मनि स्वप्नजागरौ न भवतः, तयोः सुषुप्त्यवस्थासमानाश्रयत्वादित्यर्थः । हेत्वन्तरमप्याह, जाग्रदित्यादिना, यतो जाग्रत्स्वप्नसुषुप्तीनां साक्षी द्रष्टा, अतोऽहमात्मा, अतद्दशः, ता जाग्रदाद्या दशा अवस्था यस्य स तद्दशः, तद्दशो न भवतीत्यतद्दशः, जाग्रदाद्यवस्थारहित इत्यर्थः । अत्रेदमनुमानं विवक्षितम्, आत्मा जाग्रदाद्यवस्थावान् न भवति, जाग्रदाद्यवस्था- साक्षित्वात्, यो यत्साक्षी न स तद्धर्मवान्, यथा घटसाक्षी न घटधर्मवानिति । तदुक्तमन्वर्थं नाम सर्वज्ञात्ममुनिभिः—

*"तिस्रोऽपि चिद्घनतनोस्तव दृश्यभूता*

*दूरे चकासति मतेर्बहिरेव तावत् ।*

*आविस्तिरोभवनधर्मतया ह्यवस्थाः*

*कः संकरो विमलचिद्वपुषस्तवाभिः" ॥इति ॥११ ॥*

जाग्रदाद्यवस्थालक्षणपर्यालोचनयापि नात्मनोऽवस्थासम्बन्ध इत्याह—

***विज्ञानविरतिः सुप्तिस्तज्जन्म स्वप्नजागरौ ।***

***तत्साक्षिणः कथं मे स्युर्नित्यज्ञानस्य ते त्रयः ॥१२ ॥***

**विज्ञानेति।** विज्ञानविरतिर्विज्ञानस्य विशेषज्ञानस्य विरतिरुपरतिः सुप्तिरित्युच्यते, तज्जन्म तस्य विशेषज्ञानस्य जन्मोत्पत्ति, स्वप्नजागरावित्युच्येते, तत्रापि वासनामयप्रपञ्च-विज्ञानं स्वप्नः, स्थूलप्रपञ्चविज्ञानं जाग्रदिति विभाग इत्यर्थः। ततः किं तत्राह, तत्साक्षिण इत्या-दिना। नित्यज्ञानस्यालुप्तचिद्रूस्य तत्साक्षिण उक्तलक्षणसुषुप्त्यादिसाक्षिणो मे ममात्मनस्ते त्रयः सुषुप्तिस्वप्नजागराः कथं स्युः, न कथंचिदित्यर्थः। अयं भावः— सुषुप्त्यवस्थायां तावत् सुषुप्तितात्कालिकाज्ञानाभावभासकं किञ्चिच्चैतन्यमङ्गीकार्यं सर्वैरपि, अन्यथा उत्थितस्य पुरुषस्य सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति सुषुप्तितात्कालिकाज्ञानपरामर्शानुपपत्तेस्त-च्चैतन्यं न जन्यम्, मनश्चक्षुरादेः सुप्त्यन्तःपातित्वादनन्तं च तदजन्यभावस्य नित्यत्वनियमात्, तच्चैतन्यमस्माभिरात्मेत्युच्यते। तथा च कथमनादिनित्यज्ञानस्वरूपस्यात्मनो ज्ञानोपरमरूपा सुषुप्तिः, ज्ञानोत्पत्तिरूपौ स्वप्नजागरौ च स्युः, अहङ्कारस्य तु जन्यवृत्तिरूपज्ञानाश्रयत्वात् तत्त्रयमुपपद्यते। ततश्चात्मा जाग्रदाद्यवस्थारहित इति ॥१२॥

इदानीमात्मनो निर्विकारब्रह्माभेदाय षड्भावविकारराहित्यं साधयति—

*षड्विकारवतां वेत्ता निर्विकारोऽहमन्यथा।*

*तद्विकारानुसन्धानं सर्वथा नावकल्पते ॥१३॥*

**षड्विकारेति।** षड्विकारवतां षड्भावविकारवतां, षट् च ते भावविकाराश्च षड्भावविकाराः, जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, विनश्यति, इत्युक्ताः। ते येषां सन्ति ते षड्भावविकारवन्तस्तेषां बाह्यघटादीनाम्, आन्तरबुद्ध्यादीनां च, वेत्ता ज्ञाता-हमात्मा निर्विकारो विकाररहितो भवामि। आत्मा हि बाह्यान्तरवस्तूनामुत्पत्त्यादिविकारान् जानाति, अतो निर्विकारो भवितुमर्हति, यो यज्जानाति न स तद्धर्मवानिति व्याप्तेर्लोक-सिद्धत्वादित्यर्थः। तदुक्तं वार्तिककृता—

*"नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः।*

*धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः" ॥ इति।*

विपक्षे दोषमाह— अन्यथेत्यादिना। अन्यथा विकारसाक्षिणोऽपि विकारित्वे तद्वि कारानुसन्धानं, तेषां विकारिवस्तूनां ये विकारास्तेषामनुसन्धानं सर्वथा सर्वप्रकारेणापि नाव-कल्पते, न सम्भवतीत्यर्थः। अयमभिसन्धिः— आत्मनोऽपि विकारित्वे किमात्मन इतरेषां च विकारा आत्मना ज्ञायन्ते, उतेतरैः, नोभयथापि, विकारिवस्तुनो मृदादिवज्जडत्वनियमा-दिति ॥१३॥

किञ्च, विकारिवस्तुनो विकाराणां च किं भेद उताभेदः? नाद्यः, भिन्नयोर्गवाश्वयोरिव विकारविकारिभावानुपपत्तेः, इत्यभिप्रेत्य द्वितीयपक्षे दूषणमाह—

*तेन तेन हि रूपेण जायते लीयते मुहुः ।*
*विकारि वस्तु तस्यैषामनुसन्धातृता कुतः ॥१४॥*

**तेनेति।** तेन तेन रूपेणोत्पत्त्यादिविकाररूपेण तदभिन्नं विकारि वस्त्वपि जायत उत्पद्यते, मुहुः शश्वल्लीयते, नश्यति च, तयोरभेदादित्यर्थः। हि यस्मादेवं तस्मात् तस्य विकारिवस्तुन एषां विकाराणामनुसन्धातृता कुतः, अनुसन्धानं कुतः, न कुतोऽपि भवेदित्यर्थः। तत्तद्विकाररूपेण तदा तदा नश्यतो विकारिवस्तुनः कथं कालान्तरीयं विकारानुसन्धानं घटते, न कथञ्चिदित्यर्थः ॥१४॥

नन्वात्मा स्वयं विकारी सन्नप्यात्मन इतरेषां च विकारान् विजानातु, न च तस्य विकारित्वाविशेषे कथं स्वेतरपरिज्ञानमिति वाच्यम्, शिलात्वाविशेषेऽपि रत्नस्य स्वभावविशेषेण स्वेतरावभासकत्ववदात्मनोऽपि स्वभावविशेषेण स्वेतरविकारानुसन्धानोपपत्तेः। न च तेन तेन विकारेण साकं नष्टस्य कथं सर्वविकारानुसन्धानमिति वाच्यम्, तस्य विकारिण आत्मनो विकारैरत्यन्ताभेदस्यानङ्गीकारात्, किं त्वीषद्भेदघटिताभेदस्य तादात्म्यस्यैव तन्तुपटयोरिवाङ्गीकारात्, इत्याशङ्क्य, एवमप्यात्मन आद्यन्तविकारद्वयानुसन्धानं न सम्भवतीत्याह—

*न च स्वजन्म नाशं वा द्रष्टुमर्हति कश्चन ।*
*तौ हि प्रागुत्तराभावचरमप्रथमक्षणौ ॥१५॥*

**न चेति।** कश्चन कश्चिन्निपुणोऽपि स्वजन्म स्वोत्पत्तिं नाशं ध्वंसं वा द्रष्टुं ज्ञातुं नार्हति, न शक्नोतीत्यर्थः। तत्र हेतुमाह— तौ हीत्यादिना, हि यस्मात् तौ जन्मनाशौ प्रागुत्तराभावचरमप्रथमक्षणौ, प्रागुत्तरौ यावभावौ प्रागभावप्रध्वंसाभावौ तयोर्यौ चरमप्रथमक्षणौ तौ प्रागुत्तराभावचरमप्रथमक्षणौ, प्रागभावचरमक्षण उत्पत्तिर्वस्तुनः प्रध्वंसाभावप्रथमक्षणो नाश इत्यर्थः। यस्माज्जन्मनाशौ प्रागुत्तराभावचरमप्रथमक्षणौ तस्मात्[1] स्वजन्म नाशं वा द्रष्टुं नार्हतीति सम्बन्धः। इदमत्राकूतम्— आत्मा हि स्वसमानकालिकवस्त्वेव जानातीति वक्तव्यम्, दीप इव स्वसमानकालिकपदार्थावभासकः, तथा चावस्थानसमयेऽविद्यमानयोः प्रागभावप्रध्वंसाभावयोः परिज्ञानाभावे कथं प्रागभावचरमक्षणरूपं स्वजन्म[2], प्रध्वंसाभावप्रथमक्षणरूपं नाशं च, जानीयात्, न कथंचिदपीत्यर्थः। तयोश्चासिद्धौ मध्यमवर्तिविकाराणामप्यसिद्धिरेव। तेषामपि विकाराणामुत्पत्तिनाशसमानाश्रयत्वनियमात्। तदुक्तं वाक्यवृत्तौ भाष्यकारैः—

*"देहेन्द्रियमनःप्राणाहङ्कृतिभ्यो विलक्षणः ।*
*प्रोज्झिताशेषषड्भावविकारस्त्वंपदाभिधः" ॥इति ।*

ततश्चात्मा निर्विकारत्वाद् ब्रह्मैवेत्यर्थः ॥१५॥

---

१. –शावीदृशो तस्मात्, इति पा.        २. जन्म इति पा.

ननु पूर्वोक्तं सर्वं वृथा, आत्मन उक्तस्वरूपब्रह्मत्वज्ञाने प्रयोजनाभावात् । न च संसार निवृत्तिरात्मनो ब्रह्मत्वज्ञाने प्रयोजनमिति वाच्यम्, तन्निवृत्तेरसम्भवात् । संसारो ह्यात्मन्य हङ्कारोपाधिना प्रतीयमानः कर्तृत्वादिभिः[१], स च न ज्ञानेन निवर्तयितुं शक्यः, तस्यात्मनि सोपाधिकभ्रमत्वात्, सोपाधिकभ्रमस्य च यावदुपाध्यवस्थानम्, तत्त्वज्ञानेऽप्यवस्थानात्, लोके सोपाधिकभ्रमस्य प्रतिबिम्बचलनादेर्यावदुपाधिचलनं प्रतीतेः । न चोपाधेरहङ्कारस्य ब्रह्मज्ञानेन निवृत्तौ तत्प्रयुक्तस्यात्मनि प्रतीयमानस्य कर्तृत्वादेरपि निवृत्तिरिति वाच्यम्, तस्य मूलाज्ञाने सति निवृत्तेरसम्भवात् । न च मूलाज्ञानस्याप्यात्मनि विद्यमानस्य ब्रह्मज्ञाना-न्निवृत्तिरिति वाच्यम्, तस्य कल्पकाभावेनाकल्पिततया ज्ञानेन निवर्तयितुमशक्यत्वात्, अन्यथाज्ञानस्यानवस्थानप्रसङ्गात्, इत्याशङ्क्याज्ञानस्य ज्ञाननिवर्त्यत्वसिद्धये कल्पितत्वं वक्तुं तस्यात्मनि वस्तुतोऽसम्भवमाह—

*न प्रकाशेऽहमित्युक्तिर्यत्प्रकाशैकबन्धना ।*

*स्वप्रकाशं तमात्मानमप्रकाशः कथं स्पृशेत् ॥१६ ॥*

**न प्रकाशेति** । अहं न प्रकाशेन भामीत्युक्तिर्वचनं यत्प्रकाशैकबन्धना, यस्य प्रकाशो यत्प्रकाशः, स्वरूपप्रकाश एक एव निबन्धनं निमित्तं यस्याः सा तथोक्ता, न प्रकाश इति व्यवहारस्य प्रकाशैकनिबन्धनत्वात्, स्वप्रकाशानुभवनिमित्तत्वादित्यर्थः । तं स्वप्रकाशं स्वय मेव भासमानमात्मानमप्रकाशोऽज्ञानं कथं स्पृशेदावृणुयात्, न कथञ्चिदित्यर्थः ।

अयं भावः । आत्मा सर्वदा स्वयंभासमानः सर्वं भासयति, स कथमज्ञानेन प्रकाश विरोधिना स्पृश्येत, न हि खरतरकिरणशाली दिनकरस्तमसा स्पृश्यमानो दृश्यते, तत् कस्य हेतोः, प्रकाशाप्रकाशयोर्विरोधात्, तथा चाज्ञानस्यात्मनि युक्त्यसहत्वान्न परमार्थतः सम्भव इति ॥१६ ॥

ननु कथं तर्हि न प्रकाश इत्यात्मन्यज्ञानानुभव इत्याशङ्क्य सूर्ये पेचकादीनाम न्धकारप्रतीतिवद्भीत्या[२]प्युपपद्यत इत्याह—

*तथाप्याभाति कोऽप्येष विचाराभावजीवनः ।*

*अवश्यायश्चिदाकाशे विचारार्कोदयावधिः ॥१७ ॥*

**तथापीति** । यद्यपि वस्तुत आत्मन्यज्ञानं न सम्भवति, तथाप्येषोऽप्रकाश अवश्यायो नीहारः, अवश्यायवदवश्यायः, आवरकत्वात्, चिदाकाशे चित्प्रकाश आत्मन्याभातीति सम्बन्धः[३] ।

---

१. त्वादिः इति पा. २. -द्भ्रान्त्या- इति पा. ३. योजना इति पा.

नन्वज्ञानस्य वस्तुतोऽसत्त्वे कथं प्रत्यक्षप्रतीतिः, न ह्यसतः शशविषाणादेः प्रत्यक्ष प्रतीतिरस्ति, तत्राह कोऽपीति, कोऽपि सत्त्वासत्त्वाभ्यामनिर्वचनीयोऽप्रकाशस्यासत्सद्विल क्षणत्वाङ्गीकारान्न प्रत्यक्षप्रतीत्यनुपपत्तिरित्यर्थः।

नन्वेवमप्यप्रकाशस्यात्मन्यनुभवो नोपपद्यते, विरोधादिति चेत्, न, तथा हि किं जड वस्त्वप्रकाशविरोधि, उत स्वप्रकाशरूप आत्मा? नाद्यः, जडाप्रकाशयोः परस्परविरोधा सम्भवात्। नापि द्वितीयः, तस्य विरोधिनि स्वप्रकाश आत्मन्यवस्थानानुपपत्तेः। न चाहं न प्रकाश इत्यज्ञानसाधकस्य तस्य नाज्ञानविरोधित्वमिति वाच्यम्, आत्मस्वरूपस्य प्रकाशस्या विरोधित्वेऽन्यस्यापि विरोधिनोऽभावात् कदापि निवृत्तिर्न स्यात्, तत्राह विचारार्कोदयावधि. रिति। विचारो विचारजन्यं ज्ञानमेवार्कः सूर्यः, तमोनिवर्तकत्वात्, तस्योदय उत्पत्तिः, सावधिः स्थितिर्मर्यादा यस्याप्रकाशस्य सः, विचारर्कोदयावधिरित्यर्थः। केवलात्मनोऽविरोधित्वेऽप्य खण्डाकारवृत्त्यारूढात्मचैतन्यस्य तन्निवर्तकत्वोपपत्तेः, केवलसूर्यकिरणस्यादग्धृत्वेन तृणादि भासकत्वेऽपि सूर्यकान्तसंयुक्तस्य तस्य दग्धृत्वदर्शनादिति भावः। किमिति तर्हि वाक्यजन्या खण्डाकारवृत्तौ सत्यामपि सर्वेषामात्माज्ञानं न निवर्तत इत्याशङ्क्याह— विचाराभावजीवन इति। विचाराभाव एव [illegible] भाव एव। जीवनमवस्थितिहेतुर्यस्याप्रकाशस्य सः, विचाराभावजीवन इत्यर्थः। वाक्यजन्याप्य खण्डाकारवृत्तिरसम्भावनादिभिः प्रतिबद्धा सती नाज्ञानं निवर्तयति, यथा मणिमन्त्रादिभिः प्रति बद्धोऽग्निः संयुक्तमपि तृणादिकं न दहति, तद्वत्। तदुक्तं सर्वज्ञात्ममुनिभिः—

*"पुरुषापराधमलिना धिषणा निरवद्यचक्षुरुदयापि यथा।*
*न फलाय भृष्टविषया भवति श्रुतिसम्भवापि तु तथात्मनि धीः" ॥इति।*

यदा तु सम्यग्विचारेणासम्भावनादयो निवर्तन्ते, तदा अप्रतिबद्धा सत्यज्ञानं निव र्तयति, यथा मण्यादिप्रतिबन्धनिवृत्तावग्निस्तृणादिकं दहति तद्वत्। एतदपि तैरेवोक्तम्—

*"पुरुषापराधविगमे तु पुनः प्रतिबन्धकव्युदसनात् सफला।*
*मणिमन्त्रयोरपगमे तु यथा सति पावकाद्भवति धूमलता" ॥इति।*

तथा चाज्ञानस्यानिर्वचनीयस्य कल्पितत्वेन ज्ञानान्निवृत्त्युपपत्तिः। न च तस्य कल्प काभावोऽज्ञानस्य, लोके दीपवत्, भाट्टपक्षे स्फुरणवत्, गुरुमते संवेदनवत्, गुरुबौद्धव्यति रिक्तमते भेदवच्च, स्वपरनिर्वाहकत्वान्नाप्यनवस्था, अज्ञानान्तरस्यानङ्गीकारात्। तथा चाज्ञानस्य ज्ञाननिवृत्तौ मूलोच्छेदेनाहङ्कारस्य निवृत्तिसम्भवादात्मनि प्रतीयमानस्याहङ्कारो पाधिप्रयुक्तस्य कर्तृत्वादिरूपसंसारस्यापि निवृत्तिर्भवतीति प्रत्यगात्मनो ब्रह्मत्वज्ञानं सफल मिति भावः ॥१७॥

ननु ब्रह्मव्यतिरिक्तस्य सर्वस्याज्ञानकल्पिततया परमार्थतोऽसत्त्वे कर्मकाण्डाद्यप्रामाण्यं स्यात्, स हि स्वर्गकामादेर्यागादिकर्तव्यतां बोधयति, तच्च नियोगस्यापूर्वस्य नियोज्यस्य पुरुषस्य नियोगविषयस्य यागस्य, नियोगफलस्य स्वर्गस्य च परमार्थतोऽसत्त्वेऽनुपपन्नं[१] स्यात्, ब्रह्मव्यतिरिक्तस्य सर्वस्य परमार्थतोऽसत्त्व उपनिषदप्रामाण्यं च स्यात्, तत्रापि हि मोक्षकामस्य "आत्मा वा अरे द्रष्टव्यः" इत्यादिना श्रवणादिकर्तव्यता बोध्यते, तस्याप्यप्रामाण्यमयुक्तम्, कर्मकाण्डोपनिषदेकदेशयोरपि ब्रह्मवाक्येन सह सम्प्रदायस्य तुल्यत्वात्, इत्याशङ्क्य किं तत्त्वज्ञानोत्तरकाले कर्मकाण्डाद्यप्रामाण्यमापाद्यते, किं वा ततः पूर्वकाले ? नाद्यः, तदुत्तरकालं तदप्रामाण्यस्य गार्हस्थ्ये ब्रह्मचारिधर्मविदकश्रुतेरिव संन्यासाश्रम कालेऽग्निहोत्रादिश्रुतेरिव चेष्टत्वादित्यभिप्रेत्य द्वितीयं प्रत्याह—

*आत्माज्ञानमहानिद्राजृम्भितेऽस्मिन् जगन्मये ।*
*दीर्घस्वप्ने स्फुरन्त्येते स्वर्गमोक्षादिविभ्रमाः ॥१८॥*

आत्मेति । आत्माज्ञानमहानिद्राजृम्भिते, आत्माज्ञानं प्रत्यगात्माश्रयविषयमज्ञानं तदेव महती निद्रा, अनादिकालमारभ्य प्रवृत्तत्वात्, स्वरूपावरणपूर्वकविपरीतहेतुत्वाच्च, ततो जृम्भित उत्पन्ने जगन्मये जगद्रूपेऽस्मिन्ननुभूयमाने दीर्घस्वप्ने तत्त्वज्ञानपर्यन्तमनुवर्तमान एते स्वर्गमोक्षादिविभ्रमाः स्वर्गमोक्षावादी येषां विभ्रमाणां ते तथा, स्वर्गशब्दस्तत्कामनियोज्यनियोगतद्विषययागादेरप्युपलक्षणम्, मोक्षशब्दश्च तत्साधनज्ञानश्रवणादिनियोगादेरप्युपलक्षणम्, आदिशब्दो लौकिकव्यवहारानुकूलपुत्रमित्रादिसङ्ग्रहार्थः, मोक्षस्य बन्धसापेक्षत्वा द्बन्धस्य च मिथ्यात्वाद्बन्धसापेक्षमोक्षस्यापि विभ्रमत्वं द्रष्टव्यम् । स्फुरन्ति, स्फुरन्त्येव, ननु स्फुरन्तीत्यर्थः । अयं[२] भावः— तत्त्वज्ञानात् पूर्वकाले व्यावहारिकसत्यस्य सर्वस्य जगतो नियोज्यनियोगादेः सत्त्वेन प्रबोधात् पूर्वं स्वप्नादाविव सर्वव्यावहारोपपत्तेर्न कर्मकाण्डाद्यप्रामाण्यम्, तस्य व्यावहारिकप्रामाण्यस्य सत्त्वात्, तावता च तस्य चरितार्थत्वेऽतत्पराणा मगतिकानां ब्रह्मवाक्यानां परमार्थसत्यविषयाणां नाकस्माद्बाधो युक्तः । तदर्थस्य व्यवहारातीतत्वेन व्यावहारिकप्रामाण्यानुपपत्तौ ब्रह्मवाक्यानां तात्त्विकप्रामाण्यस्याप्यनङ्गीकारे किञ्चिदपि प्रामाण्यं न स्यात्, प्रकारभेदेनोभयप्रामाण्योपपत्तौ च सर्वात्मना तदप्रामाण्यं न युक्तम् । तदुक्तं सकलवेदार्थज्ञेन ब्रह्मणापि—

*"सत्यार्थो हि द्विधा प्रोक्तो मया हे स्वर्गवासिनः ।*
*एकः स्वभावतः साक्षात् परमार्थः सदैव तु ॥*

---

१. बोधनमनुपपन्नं इति पा. २. स्फुरन्त्येते इत्यस्यायं इति पा.

*स शिवः सत्यचैन्यः सुखानन्त्य[1] स्वलक्षणः ।*

*अपरः कल्पितः साक्षाद्ब्रह्मण्यध्यस्तमायया ॥*

*व्यावहारिकसत्यार्थं साक्षात् सत्यार्थचिद्घनम् ।*

*उभयं वक्ति वेदस्तु मार्गा नैवं वदन्ति हि" ॥*

अतोऽद्वितीयब्रह्मण एव परमार्थसत्यत्वेऽपि व्यावहारिकसत्यार्थत्वेनार्थवत्त्वान्न कर्मकाण्डाद्यप्रामाण्यमिति ॥१८ ॥

नन्वेवमपि जीवस्य भोक्तुस्तद्भोग्यजातस्य च ब्रह्ममात्रत्वेऽनुभूयमानभोक्तृभोग्य-विभागो न स्यात्, सर्वस्य ब्रह्मण्यध्यस्तत्वाविशेषात्, इत्याशङ्क्य मायावशादेव विभागोऽयमुपपद्यत इत्याह—

***जडाजडविभागोऽयमजडे मयि कल्पितः ।***

***भित्तिभागे समे चित्रचराचरविभागवत् ॥१९ ॥***

जडेति । जडाजडविभागो, जडमिदं भोग्यमजडोऽयं भोक्तेति विभागः । अयं प्रतीयमानोऽजडेऽलुप्तचैतन्यस्वभावे मयि प्रत्यगभिन्ने ब्रह्मणि कल्पितः । माययारोपित इत्यर्थः । स्वप्रकाशेऽप्येकस्मिन् ब्रह्मण्युपाधिप्राधान्याद् भोग्यजडकल्पना, उपाधेयप्राधान्यादजड-भोक्तृकल्पनाप्युपपद्यते । तदुक्तं वार्तिककारैः—

*"तमःप्रधानक्षेत्राणां चित्प्रधानश्चिदात्मनाम् ।*

*परः कारणतामेति भावनाज्ञानकर्मभिः" ॥इति ।*

अजडे ब्रह्मणि सदृशविसदृशोभयकल्पने दृष्टान्तमाह— भित्तिरित्यादिना । भित्ति-भागे कुड्यप्रदेशे समे निर्विकारे, अचल इत्यर्थः । चराचरविभागवत् चरस्य गजादेरच-रस्य[2] पर्वतादेश्च विभागो यथा, तथेत्यर्थः ॥१९ ॥

नन्वेवमात्मनो ब्रह्मत्वं न सम्भवति, तस्य संसारसाक्षितारूपविकल्पयुक्तत्वाद् ब्रह्मणश्च "अस्थूलमनणु", "नेति नेति" इत्यादिश्रुत्या निर्विकल्पकतया सिद्धेरित्याश-ङ्क्याह—

***चेत्योपरागरूपा मे साक्षितापि न तात्त्विकी ।***

***उपलक्षणमेवेयं निस्तरङ्गचिदम्बुधेः ॥२० ॥***

---

१. –नन्दः इति पा.   २. –स्य जंगमादेरचरस्य इति पा.

**चेत्येति।** चेत्योपरागरूपा, चेत्यं कर्तृत्वादिप्रपञ्चः, तेनोपरागः सम्बन्धः, तद्रूपसाक्षितापि साक्षित्वमपि मे मम प्रत्यगात्मनो न तात्त्विकी, न परमार्थभूता, चेत्यस्यापरमार्थत्वेन तत्सम्बन्धिसाक्षिताया अपि परमार्थस्वरूपत्वायोगात्, किं त्वियं साक्षिता निस्तरङ्गचिदम्बुधेर्निस्तरङ्गः परमार्थतो निरस्तस्तरङ्गः कर्तृत्वादिप्रपञ्चरूपो यस्याः सा, चिदेवाम्बुधिः समुद्रो निस्तरङ्गचिदम्बुधिः, तस्य मे मम प्रत्यगात्मन उपलक्षणमेव, तटस्था सती ज्ञापिकैव, जगत्कारणत्वमिव ब्रह्मणः, तथा चात्मनो वस्तुतो निर्विकल्पत्वात्र ब्रह्मत्वानुपपत्तिरिति भावः ॥२० ॥

एवमुक्तेन प्रकारेण ब्रह्मणि जगत आत्मनि चाहङ्कारादेः कल्पितत्वेन वस्तुतोऽभावात् पदद्वयलक्ष्ये ब्रह्मणि न कश्चिदपि विकार इत्याह—

*अमृताब्धेर्न मे जीर्णिर्मृषा डिण्डीरजन्मभिः ।*

*स्फटिकाद्रेर्मे रागः स्वाप्नसंध्याभ्रविभ्रमैः ॥२१ ॥*

**अमृतेति।** अमृतो मोक्षरूपः स्वयंप्रकाशाद्वयानन्द एवाब्धिः, तस्य तत्पदलक्ष्यस्येत्यर्थः । मे मम प्रत्यगभिन्नब्रह्मणो मृषाडिण्डीरजन्मभिर्मृषारूपा मिथ्यारूपा वियदादय एव डिण्डीराः फेनास्तेषां यानि जन्मानि तैर्जन्मभिः, जन्मपदं नाशस्याप्युपलक्षणम्, न जीर्णिर्न हानिर्वृद्धिर्वा, जीर्णिपदं वृद्धेरप्युपलक्षणम्, मिथ्यावस्तुनोऽधिष्ठानादूषकत्वादित्यर्थः । ब्रह्मणि मायया वियदाद्युत्पत्त्या तदधिष्ठानब्रह्मणो न हानिर्न वृद्धिः, इत्येतद्भारतीतीर्थैरपि कूटस्थदीपे भणितम्—

*"माया मेघो जगन्नीरं वर्षत्वेष यथा तथा ।*

*चिदाकाशस्य नो हानिर्न वा लाभ इति स्थितिः" ॥इति ।*

त्वंपदलक्ष्यमपि शुद्धमित्याह— स्फटिकाद्रेरित्यादिना । स्फटिकाद्रेः स्फटिकाद्रिवत् स्वच्छस्य मे मम प्रत्यगात्मनस्त्वंपदलक्ष्यस्य, स्वाप्नसन्ध्याभ्रविभ्रमैः, स्वाप्नोऽविद्याकल्पितोऽहङ्कारादिः, स एव सन्ध्याभ्रं सन्ध्याकालिकमेघः स्वसन्निहिते स्वच्छे स्वधर्मासञ्जकत्वसाम्यात्, तत्कृतैर्विभ्रमैः कर्तृत्वादिभ्रान्तिभिः, मेघविषये विभ्रमा अनवस्थानानि संसाराः, तै रागः सम्बन्धो मेघविषय आरुण्यम्, स्फटिकपर्वतस्यारुण्यवत्, आत्मनश्चिद्रूपस्य परमार्थतः कर्तृत्वभोक्तृत्वरागद्वेषादिसम्बन्धो नास्तीत्यर्थः । अहङ्कारादिधर्मैरात्मनोऽसम्बन्धोऽपि श्रीभारतीतीर्थैरेवाभाणि चित्रदीपे—

*"अहङ्कारगतेच्छाद्यैर्देहव्याध्यादिभिस्तथा ।*

*वृक्षादिजन्मनाशैर्वा चिद्रूपात्मनि किं भवेत्" ॥इति ।*

अतः पदद्वयलक्ष्यमपि चैतन्यमतिशुद्धमिति भावः ॥२१ ॥

नन्वेवमपि पदद्वयलक्ष्ये ब्रह्मण्यस्त्येव विकारः, तस्य परमार्थतः सत्त्वाश्रयत्वस्य वक्तव्यत्वात्, अन्यथा शशविषाणवदसत्त्वप्रसङ्गात्, इत्याशङ्क्याह—

***स्वरूपमेव मे सत्त्वं न तु धर्मो नभस्त्ववत्।***

***मदन्यस्य सतोऽभावान्न हि सा जातिरिष्यते ॥२२॥***

**स्वरूपमिति।** मे मम पदद्वयलक्ष्यस्य सत्त्वं स्वरूपमेव, न तु मदाश्रितो धर्मः। यथा सत्त्वस्य सत्त्वान्तराश्रयत्वाभावान्नासत्त्वं तद्वदित्यर्थः।

ननु घटे घटत्ववत् सद्रूप आत्मन्यपि धर्मरूपं सत्त्वं किं न स्यादित्याशङ्क्य घटेष्वनेकेषु घटोऽयं घटोऽयमित्यनुगतव्यवहारसिद्धये घटत्वजातिरिव सद्व्यक्तिभेदाभावेनात्मनि सत्त्वरूपा जातिर्नाङ्गीकार्येत्याह— मदन्यस्येत्यादिना। मदन्यस्य पदद्वयलक्ष्यरूपात्मभिन्नस्य सतः सद्व्यक्त्यन्तरस्याभावात् सा सत्त्वरूपा जातिर्नेष्यते, एकव्यक्तौ जात्यनङ्गीकारे दृष्टान्तमाह— नभस्त्ववदिति। घटादिष्वनुगतव्यवहारार्थं घटत्ववज्जातिरङ्गीक्रियते। अत्र तु[१] वियदादेः सर्वस्य मिथ्यात्वेन सदन्तरस्याभावान्नानुगतव्यवहारार्थं घटत्ववज्जातिरूपं सत्त्वमङ्गीक्रियते; किन्तु स्वरूपमेव नभस्त्ववत्।

ननु घटः सन् पटः सन् कुड्यं सदित्यादिप्रतीत्यनुरोधेन घटपटाद्युपाधिभिन्नेषु सत्स्वनुगतव्यवहाराय सत्त्वं जातिरङ्गीक्रियताम्, इति चेत्, न, उपहितेषु सर्वेष्वनुगतब्रह्मरूपसन्मात्रेणैव घटाद्युपाधि [illegible]; तस्मान्न सत्त्वं जातिः। अत एव नोपाधिरपि, अनुगतव्यवहारायैव तस्यापि कल्पितत्वात्, सत्त्वस्य सन्मात्रब्रह्मरूपत्वं वसिष्ठेनाप्युक्तम्—

*"विशेषं संपरित्यज्य सन्मात्रं यदलेपकम्।*

*एकरूपं महारूपं सत्तायास्तत् परं विदुः" ॥इति।*

तथा च सत्त्वस्य स्वरूपत्वेन धर्मत्वाभावादत्यन्तं शुद्धमेव पदद्वयलक्ष्यमिति भावः ॥२२॥

नन्वेवमप्यात्मनो ज्ञानाश्रयत्वमङ्गीकर्तव्यम्, अन्यथा घटादिवदनात्मत्वाप्रसङ्गात्। ज्ञानाश्रयस्यैवात्मत्वादहं जानामीत्यात्मनो ज्ञानाश्रयत्वप्रतीतेश्च, तथा च न "साक्षी चेता केवलो निर्गुणश्च" इत्यादिश्रुत्या निर्गुणब्रह्मत्वमात्मन इत्यत आह—

***स्वरूपमेव मे ज्ञानं न गुणः स गुणो यदि।***

***अनात्मत्वमसत्त्वं वा ज्ञेयाज्ञेयत्वयोः पतेत् ॥२३॥***

---

१. न तु इति पा.

**स्वरूपमेवेति**। मे मम ज्ञानं चैतन्यं स्वरूपमेव, न तु मदाश्रितो गुणः, कुत इत्यत आह, स गुणो यदीत्यादिना, स चैतन्यं, विधेयापेक्षया पुंलिङ्गनिर्देशः, चैतन्यं गुण इति वदन् वादी प्रष्टव्यः, किं तेन चैतन्येनात्मा विषयीक्रियते न वा, उभयथापि दूषणमाह। अनात्मत्वमिति, ज्ञेयाज्ञेयत्वयोरात्मनो वेद्यत्वेऽनात्मत्वम्, घटादिवदवेद्यत्वे चासत्त्वं वा शशविषाणवदापतेत्, भवेदित्यर्थः। यद्यात्मनः स्वसमवेतज्ञानाविषयत्वमुच्यते, तदाज्ञायमानत्वेनात्मनोऽसत्त्वं स्यात्, न हि प्रमाणतो ज्ञायमानं शशविषाणमस्तीति केनचित् प्रतिपद्यते, यद्येतद्दोषपरिजिहीर्षया तस्य ज्ञायमानत्वमुच्येत, तदा घटादिवदनात्मत्वमात्मनः स्यात्, ज्ञानविषयस्यानात्मत्वनियमात्।

नन्वात्माश्रितज्ञानेनात्माश्रयत्वेन भासते, न विषयत्वेन, येन घटादिवदनात्मत्वं स्यादिति चेत्, न, ज्ञानव्यतिरिक्तस्य ज्ञानाधीनप्रकाशस्य ज्ञानविषयत्वनियमेनात्मनोऽपि ज्ञानाधीनप्रकाशस्य विषयताया आवश्यकत्वेनानात्मत्वदोषतादवस्थ्यात्।

न च ज्ञानाश्रयत्वमात्मत्वे प्रयोजकम्, लाघवात्, ज्ञानत्वस्यैव तत्प्रयोजकत्वात्। अहं जानामीति प्रतीतेश्चाहङ्काराश्रयवृत्तिविषयत्वात्।

न च ज्ञानं नष्टं ज्ञानमुत्पन्नमिति प्रतीत्या तस्य जन्मादिमत आत्मत्वमनुपपन्नमिति वाच्यम्, तस्यापि वृत्तिविषयत्वात्।

तस्मादात्मनो न ज्ञानं गुणः; किन्तु स्वरूपमेव, बादरायणोऽपि "ज्ञोऽत एव" इत्यात्मनो ज्ञानरूपत्वं सूत्रयाम्बभूव। सूत्रस्यार्थो विद्यारण्यगुरुभिरधिकरणरत्नमालायां दर्शितः—

*"अचिद्रूपोऽथ चिद्रूपो जीवोऽचिद्रूप इष्यते।*

*चिदभावात् सुषुप्त्यादौ जाग्रच्चिन्मनसा कृता"॥*

इति पूर्वपक्षे प्राप्तसिद्धान्तमाह—

*"ब्रह्मत्वादेव चिद्रूपश्चित् सुषुप्तौ न लुप्यते।*

*द्वैता दृष्टिर्द्वैतलोपान्न हि द्रष्टुरिति श्रुतेः" ॥इति।*

ननु ज्ञानरूप आत्मा स्वात्मानं जानाति न वा, जानाति चेद्युगपत् कर्मकर्तृत्वप्रसङ्गः। न चेज्जानाति, तस्यासत्त्वप्रसङ्गः, इति चेत्, न, तस्य स्वप्रकाशत्वेन ज्ञानान्तरमनपेक्ष्यैव भासमानत्वात्, नापि तस्य कर्मकर्तृत्वम्, स्वविषयत्वानङ्गीकारात्। तदुक्तं विद्यारण्यगुरुभिः पञ्चकोशविवेके—

*"स्वयमेवानुभूतित्वाद्विद्यते नानुभाव्यते।*

*ज्ञातृज्ञानान्तराभावादज्ञेयो न त्वसत्तया" ॥इति।*

यत् प्रसादाद्धि सर्वं जगद्भासते स कथं नास्ति, न प्रकाशते वा, आत्मनः सर्वावभासकत्वं स्वस्यान्यानपेक्षया भासमानत्वं चात्मयोगविंशे[१]ऽप्युक्तम्—

*"अज्ञानतत्कार्यतदीयभेदानध्यक्षयन्ती निजसत्तयैव।*

*स्मर्तुं च विस्मर्तुमहो न शक्या सुप्त्यादिषु स्वप्रभयास्मि सा चित्" ॥इति।*

तस्मादात्मा ज्ञानरूपो न ज्ञानगुणक इति स निर्गुणं ब्रह्म भवेदिति भावः ॥२३॥

एवमात्मन आनन्दोऽपि न गुणः; किन्तु स्वरूपमेवेति साधयति—

***अहमेव सुखं नान्यदन्यच्चेन्नैव तत् सुखम्।***

***अमदर्थं न हि प्रेयो मदर्थं न स्वतः प्रियम् ॥२४॥***

**अहमिति।** अहमात्मा सुखमेव सुखस्वरूप एव, न तु सुखगुणकः, यदि सुखमात्मनोऽन्यद्गुणः स्यात्, तत् सुखत्वेनाभिमतं नैव सुखं स्यात्, कुत इति चेत्, किं तदनात्मभूतसुखमनात्मशेषः, उत तच्छेषो वा?

नाद्य इत्याह— अमदर्थमिति। अमदर्थं, चेदित्यनुषङ्गः, आत्मशेषो न चेत् तर्हि न तत् प्रेयः, प्रीतिविषयो न भवेत्, आत्मशेषसर्पादौ प्रीतिविषयत्वादर्शनात्।

न द्वितीय इत्याह— मदर्थमिति। अत्रापि चेदित्यनुषज्ज्यते। मदर्थमात्मशेषश्चेत् स्वतः प्रियं न स्यात्, आत्मशेषस्य पुत्रभार्यादेः स्वतः प्रीतिविषयत्वादर्शनादित्यर्थः। सुखं हि सर्वेषां प्रियं भवति, तच्च स्वत एव प्रियम्, न परोपाधिना, अत आत्मैव भवितुमर्हति।

कथमिति चेत्, शृणु, जगति सर्वेषां पदार्थानां चतुर्धावस्थितिः। आत्मा प्रियोऽप्रिय उपेक्ष्यश्चेति, सुखं तावन्न व्याघ्रादिवदप्रियम्, तस्य सर्वैः प्रार्थ्यमानत्वात्, अत एव न लोष्टादिवदुपेक्ष्यम्, नापि प्रियमात्रम्, तच्छेषे पुत्रभार्यादावपि तद्दर्शनात्, अतः परिशेषादात्मैव।

नन्वात्मशेषत्वेन तस्य प्रीतिविषयत्वं किं न स्यात्, इति चेत्, तर्हि वक्तव्यम्, आत्मनि प्रीतिः किं निमित्तेति, येन सुखमपि तच्छेषतया प्रियं जायते, सुखसाधनत्वादिति चेत्, तर्हि सुखसाधनेनात्मनोपकार्यः कश्चिद्वक्तव्यः, स्रक्चन्दनादिसुखसाधनेनान्यस्यैवोपकार्यत्वदर्शनात्, आत्मनि च कर्मकर्तृविरोधात्। स चोपकार्योऽन्यो न दृश्यते, तस्मान्न सुखसाधनतयात्मा प्रियः; किन्तु सुखस्वरूपतया। तस्मान्नात्मशेषतया सुखस्यापि प्रियत्वम्; किन्त्वात्मतयैव[२]।

---

१. योगे चिदंशे— इति पा. २. किन्तु सुखतयैव इति पा.

ननु सुखमुत्पन्नं नष्टमिति प्रतीयमानस्य कथमात्मत्वमिति चेत्, न, तस्य तद्व्यञ्जकवृत्तिविषयत्वात्, सर्वमेतदुक्तं ब्रह्मानन्दे—

*"आत्मा शेष उपेक्ष्यं च द्वेष्यं चेति चतुर्ष्वपि।*
*आत्मा प्रेयान् प्रियः शेषो द्वेष्योपेक्ष्ये तदन्ययोः॥*
*इति व्यवस्थितो लोको याज्ञवल्क्यमतं च तत्।*
*सुखसाधनतोपाधेरन्नपानादयः प्रियाः॥*
*आत्मानुकूल्यादन्नादिसमश्चेदमुनात्र कः।*
*अनुकूलयितव्यः स्यान्नैकस्मिन् कर्मकर्तृता"॥* इत्यादि।

आत्मनः सुखरूपत्वं सर्वज्ञात्ममुनिभिरप्युक्तम्—

*"सर्वं यदर्थमिह वस्तु यदस्ति किञ्चित्*
*पारार्थ्यमुज्झति च यन्निजसत्तयैव।*
*तद्वर्णयन्ति हि सुखं सुखलक्षणज्ञा*
*स्तत् प्रत्यगात्मनि समं सुखितास्य तस्मात्"॥इति।*

ब्रह्मगीतासु च—

*"प्रत्यग्रूपः शिवः साक्षात् परमानन्दलक्षणः।*
*परप्रेमास्पदत्वेन प्रतीतत्वात् सुरर्षभाः"॥*
*"सर्वस्यैव तु कामाय न सर्वं भवति प्रियम्।*
*किन्त्वात्मनस्तु कामाय ततः प्रियतमः स्वयम्॥*
*अतो देवाः प्रियतमो ह्यात्मा न सुखलक्षणः"।* इत्यादि।

तस्माद्युक्त्या, विद्वदनुभूत्या, बहुविदां वचनैश्च, आत्मा सुखरूप इत्यत्र न कश्चिद्विवाद इति भावः ॥२४॥

नन्वेवमपि ब्रह्मणः "एकधैवानुद्रष्टव्यम्" इति श्रुत्युक्तमखण्डैकरसत्वं न सम्भवति, उक्तप्रकारेण तस्य सच्चिदानन्दरूपत्रयात्मकत्वात्। न च सच्चिदानन्दानां तेषां त्रयाणामप्यत्यन्ताभेद इति वाच्यम्, तथात्वे तद्वाचकानां सच्चिदानन्दशब्दानां त्रयाणामपि पर्यायतया सह प्रयोगानुपपत्तेः। न हि घटकुम्भकलशादिशब्दानामेकार्थवाचकानां सह प्रयोगोऽस्तीत्याशङ्क्य ब्रह्मणोऽखण्डैकरसत्वमुपपादयति—

*न हि नानास्वरूपं स्यादेकं वस्तु कदाचन।*

*तस्मादखण्ड एवास्मि विजहज्जागतीं भिदाम् ॥२५॥*

**न हीत्यादिना।** एकमद्वितीयं सच्चिदानन्दात्मकं वस्तु ब्रह्म कदाचन कदाचिद प्युपाधिकाले तदभावकालेऽपि नानास्वरूपं नानारसं न स्यात्, न भवेदित्यर्थः। तत्र हेत्व भिप्रायेण वस्त्विति विशेषणम्, यतो वस्तु परमार्थभूतम्, तत इत्यर्थः। वस्तुग्रहणं ज्ञानानन्दयोरप्युपलक्षणम्।

अयमर्थः — ब्रह्मणि सत्यज्ञानानन्दानां परस्परभिन्नत्वे सत्यस्य सत्यत्वं ज्ञानस्य ज्ञानत्वमानन्दस्यानन्दत्वं च न सिध्येत्, कथमिति चेत्, सत्यं यदि ज्ञानाद्भिन्नं स्यात्, जडस्य तस्य शुक्तिकारूप्यादेरिव सत्यत्वं न स्यात्। एवं यदि ज्ञानमपि सत्याद्भिन्नं स्यात्, अस त्यस्य तस्य ज्ञानस्य जडत्वनियमेन ज्ञानत्वं न स्यात्, ततः सत्यज्ञानयोः सत्यत्वज्ञानत्व सिद्धयेऽत्यन्तं परस्पराभेदोऽङ्गीकर्तव्यः। तदुक्तं सर्वज्ञात्ममुनिभिः—

*"सत्येऽप्यस्ति ज्ञानता ज्ञानतायां सत्यत्वं च स्पष्टमस्त्येव तद्वत्।*

*सत्यप्येवं नातिरेकावकाशः पूर्णे तत्त्वे ज्ञानसत्योपपत्तेः" ॥इति।*

एवं यदि ज्ञानादानन्दोऽपि भिन्नः स्यात्, ज्ञानभिन्नस्य तस्य घटादिवदनानन्दत्वमेव स्यात्, तथानन्दादपि यदि ज्ञानं भिन्नं स्यात्, आनन्दभिन्नस्य तस्य घटादिवज्जडत्वेन ज्ञानत्वमेव न स्यात्, ततो ज्ञानानन्दयोरपि ज्ञानत्वानन्दत्वसिद्धयेऽत्यन्तमभेदोऽङ्गीकर्तव्यः। इदमपि तैरेवोक्तम्—

*"आनन्दत्वे ज्ञानता ज्ञानतायामानन्दत्वं विद्यते निर्विशङ्कम्।*

*सत्यप्येवं नातिरेकावकाशः पूर्णे तत्त्वे ज्ञानसौख्योपपत्तेः" ॥इति।*

एवं सत्यादानन्दोऽपि यदि भिन्नः स्यात्, असत्यस्य तस्य शुक्तिरूप्यादेरिवानन्दत्वं न स्यात्, एवं सत्यमपि यद्यानन्दाद्भिन्नं स्यात्, अनानन्दस्य तस्य शुक्तिरूप्यादेरिव सत्यत्वं न स्यात्, ततः सत्यानन्दयोरप्यत्यन्तमभेदो वक्तव्यः, इदमपि तैरेवोक्तम्—

*"आनन्दत्वे सत्यता सत्यतायामानन्दत्वं निर्विवादं प्रसिद्धम्।*

*सत्यप्येवं नातिरेकावकाशः पूर्णे तत्त्वे सत्यसौख्योपपत्तेः" ॥इति।*

नित्यमुक्तशुद्धत्वादिष्वप्येवमेवोह्यम्[१]।

न च तेषामत्यन्ताभेदे तद्वाचकसत्यादि[२]पदानां पर्यायता वाच्या, अर्थानां भेदस्या ङ्गीकारात्, सत्यपदं मुख्यामुख्यसत्यरूपब्रह्माकाशशबलरूपे सत्ये व्युत्पन्नम्। ज्ञानपदं च

१. –मेव बोध्यम् इति पा. २. सच्चिदानन्दादि इति पा.

चैतन्यान्तःकरणवृत्तिरूपमुख्यामुख्यज्ञानद्वयशबलरूपे ज्ञाने व्युत्पन्नम्, आनन्दपदं च प्रत्यग् बुद्धिवृत्तिरूपमुख्यामुख्यानन्दे व्युत्पन्नम्। एवं नित्यशुद्धादीन्यपि पदानि मुख्यामुख्यतत्त द्द्वयशबलरूपे तस्मिंस्तस्मिन् व्युत्पन्नानीति द्रष्टव्यम्। एतत् सर्वं सर्वज्ञात्ममुनि भिरेवोक्तम्—

*"आकाशादौ सत्यता तावदेका प्रत्यङ्मात्रे सत्यता काचिदन्या।*
*तत्सम्पर्कात् सत्यता तत्र चान्या व्युत्पन्नोऽयं सत्यशब्दस्तु तत्र॥*
*बुद्धेर्वृत्तौ ज्ञानता तावदेका प्रत्यग् बोधे ज्ञानता काचिदन्या।*
*तत्सम्पर्काज्ज्ञानता तत्र चान्या व्युत्पन्नोऽयं ज्ञानशब्दस्तु तत्र॥*
*बुद्धेर्वृत्तौ तावदानन्दतैका प्रत्यङ्मात्रे काचिदानन्दतान्या।*
*तत्सम्पर्कात् काचिदानन्दतान्या व्युत्पन्नोऽयं तत्र चानन्दशब्दः" ॥इत्यादिना।*

ततो वाच्यार्थभेदस्याङ्गीकारान्न पदानां पर्यायतापीति भावः।

ननु कथं तर्हि वाच्यार्थभेदे सत्यादीनामत्यन्ताभेद उक्त इत्याशङ्क्य वाच्यार्थ भेदेऽपि तल्लक्ष्यार्थानामभेदादित्याह, तस्मादित्यादिना। यस्मात् सत्यादीनां परस्पराभेदेन सत्यादिरूपत्वम्, यस्माच्च न पर्यायता, तस्माज्जागतीं भिदां जगदाकाशाद्युपाधिः, तत्प्रयुक्तां भिदां भेदं विजहति, अतोऽहमखण्ड एवास्मि, एकरस एवास्मि, न तु नानारसः, सत्यादि पदैर्भागलक्षणया बोधितसत्याद्यात्मकाखण्डैकरसोऽस्मीत्यर्थः।

अत "एकधैवानुद्रष्टव्यम्" इति श्रुत्युक्तमेकरसत्वमुपपन्नमिति भावः ॥२५॥

इदानीमुक्तप्रकारेण जीवस्य ब्रह्मत्वोपपादकैस्तर्कैरनुगृहीतं सत् तत्त्वमस्यादिवाक्यं जीवब्रह्मणोरत्यन्ताभेदं भागत्यागलक्षणया बोधयति, इत्याह—

***परोक्षतापरिच्छेदशाबल्यापोहनिर्मलम्।***
***तदसीति गिरा लक्ष्यमहमेकरसं महः ॥२६॥***

**परोक्षतेति**। परोक्षतापरिच्छेदश्च तत्प्रयोजकं शाबल्यं च तानि तथोक्तानि, तेषाम पोहेन निर्मलं परोक्षतापरिच्छेदशाबल्यापोहनिर्मलम्[1], परोक्षता परोक्षत्वमीश्वरस्य, परिच्छेदः परिच्छिन्नत्वं जीवस्य, एतद्द्वयं च जीवेश्वरोभयगतविरुद्धधर्माणां सर्वेषामप्युपलक्षणम्। शाबल्यं जीवेश्वरोभयगतपरोक्षत्वपरिच्छिन्नत्वादिप्रयोजकमायान्तःकरणरूपोपाधिनिमित्त समस्त[2]सम्बन्धः, तेषामपोहेन त्यागेन निर्मलं शुद्धम्, ऐक्याविरोधीत्यर्थः। तदसीति गिरा

१. –हेन निर्मलं तथोक्तम्, इति पा.  २. धिद्वय- इति पा.

तत्त्वमस्यादिमहावाक्येन लक्ष्यं जहदजहल्लक्षणया बोध्यम्, लक्ष्यस्वरूपमेवाह— एकरस मिति। महः सत्यानन्दचैतन्यरूपमहं प्रत्यगात्मास्मीत्यर्थः। अत्राप्यनुग्राहकयुक्तिः पूर्ववद् द्रष्टव्या, यद्यात्मा ब्रह्मभिन्नः स्यादात्मनः सर्वान्तरत्वलक्षणमात्मत्वं न स्यात्, एवं ब्रह्मापि यद्यात्मभिन्नं स्यान्निरतिशयमहत्त्वलक्षणं ब्रह्मत्वं ब्रह्मणो न स्यात्। इदमपि तैरेवोक्तम्—

*"अद्वैतेऽर्थे प्रत्यगर्थोऽस्ति तद्वत् प्रत्यक्तत्त्वे चाद्वयस्यापि भावः।*

*यद्यप्येवं नातिरेकावकाशः पूर्णे तत्त्वे तत्त्वमर्थोपपत्तेः"॥इति।*

वाच्यार्थभेदादेवोभयोस्तत्त्वंपदयोरपर्यायतापि। इदमपि तैरेवोक्तम्—

*"आदेयांशेनाणुमात्रोऽपि भेदो यद्यप्येवं भिन्नमादाय शब्दौ।*

*वर्तेते त्वय्यद्वयात्मप्रकाशे बाह्यं हातुं जामिता[1] नास्ति तस्मात्"॥इति।*

वाक्यार्थश्च सकलवेदार्थाभिज्ञेन ब्रह्मणा ब्रह्मगीतायां स्फुटो दर्शितः —

*"त्वमहंशब्दवाच्यार्थस्यैव देहादिवस्तुनः।*

*न तच्छब्दार्थतां वक्ति श्रुतिस्तत्त्वमसीति सा[2]॥*

*तदर्थैक्यविरुद्धांशं त्यक्त्वा वाच्यगतं श्रुतिः।*

*अविरुद्धं चिदाकारं लक्षयित्वा ब्रवीति हि॥*

*तदर्थे च त्वमर्थैक्यं विरुद्धांशं विनैव च।*

*कारणत्वादि वाच्यस्थं रक्षयित्वा तु केवलम्॥*

*चिदाकारं पुनस्तस्य त्वमर्थैक्यं ब्रवीति च।*

*तत्त्वंशब्दार्थभूतस्य चिन्मात्रस्य परात्मनः॥*

*एकत्वं यत् स्वतः सिद्धं स हि वाक्यार्थ आस्तिकाः"॥इति।*

तस्माच्छ्रुत्या युक्त्या बहुज्ञानां वचनाच्च[3] जीवस्य सच्चिदानन्दनित्यशुद्धबुद्ध मुक्तस्वरूपता सिद्धेति भावः॥२६॥

इदानीमुक्तस्वरूपं ब्रह्मात्मत्वेन साक्षात्कुर्वतः पुरुषस्य स्वप्रकाशापरिमितानन्दब्रह्मा त्मतावस्थानलक्षणा विदेहमुक्तिः प्रारब्धकर्मक्षयपर्यन्तं देहेन्द्रियादिप्रतिभाससहिता तादृग् ब्रह्मात्मनावस्थानलक्षणा जीवन्मुक्तिश्च फलमित्यभिप्रेत्य प्रकरणमुपसंहरति—

---

१. -ह्यादेवं हेतुता—इति पा. २. या इति पा. ३. -स्या बहुवचनाच्च इति पा.

